

अष्टाङ्गबुद्ध्या संबुद्धः स्पष्टवादी जितेन्द्रियः ।
श्रीसम्पूर्णानन्दनामा शिष्टो योगजिताशयः ॥ १ ॥
गुरुतातकृपालेशात् प्राप्तं व्याकृतिदर्शनम् ।
समर्प्यते मन्मित्रस्य मन्त्र-तन्त्रकराब्जयोः ॥ २ ॥

रामाज्ञापाण्डेयेन ।

# FOREWORD

I have been asked to write a few words about the व्याकरणदर्शनभूमिका of Pandit Ramajna Pandeya, U. P. Government Research Scholar, working in the Saraswati Bhavan, Government Sanskrit College, Banaras. I do so with pleasure. It is an attempt to bring together the ideas, partly philosophical and partly linguistic, found scattered in Vaiyākaraṇa literature. That Vyākaraṇa was looked upon as a Darśana is made clear by the fact that one of the chapters of the Sarvadarśanasaṅgraha is entitled: पाणिनिदर्शनम्. That chapter is all too brief. It is based on ancient works such as the Vākyapadīya of Bhartṛhari. The ultimate source of all these ideas is, of course, the Aṣṭādhyāyī of Pāṇini as interpreted by Kātyāyana and Patañjali.

The present work called भूमिका is only the first part of the work. Two more parts, the पीठिका and the प्रतिमा are promised. The भूमिका gives in summary form the contents of the other two parts. It is based, not only on the ultimate source mentioned above, but also on later works such as the Vākyapadīya of Bhartṛhari and the commentaries thereon, the Pradīpa of Kaiyaṭa, the Laghumañjūṣā and the Udyota of Nāgoji Bhaṭṭa. The author has also made extensive use of the phonetic material found in the Śikṣā works and the Prātiśākhyas, especially the Taittirīyaprātiśākhya, with its two commentaries, the

Tribhāṣyaratna and the Vaidikābharaṇa. This is a novel feature of the work as compared with the Laghumañjūṣā or the Vaiyākaraṇabhūṣaṇa of Koṇḍabhaṭṭa. A certain amount of material has been taken from the Tantras also, especially on the phonetic and mystic aspects of the varṇamālā.

The work deals with a wide range of topics: the nature and scope of Vyākarṇa, Sphoṭa and its varieties, the number of sounds in the Sanskrit language, their mode of articulation, their variation according to अनुप्रदान, संसर्ग, स्थान, करण and परिमाण, the different pramāṇas, the Vaiyākarṇa conception of मोक्ष, जाति, द्रव्य, गुण, दिक्, क्रिया, काल, लिङ्ग and वृत्ति। Incidentally there are discussions on such topics as the वीचीतरङ्गन्याय and the कदम्बगोलकन्याय.

One noteworthy feature of the work is the way in which the author unhesitatingly rejects the views of even such writers as Helārāja and Nāgeśa. Against Helārāja, he holds that Vaiyākaraṇas accept the परिणामवाद and not the विवर्तवाद (p. 117). He considers the view of Nāgeśa on वर्णस्फोट as going against the Bhāṣya (p. 49) and rejects Nāgeśa's statement: अणुः शब्द इत्याहुर्ता मन्यन्ते on the ground that the view in question is held really by Grammarians.

The work is written in very simple Sanskrit. The author states his views and his disagreements from others in a forthright manner. Pandits may miss the तर्क element in the exposition of the ideas but, as a compensation, the work may appeal to a wider circle of readers. The phonetic material taken

from different sources requires a comparative and critical study on the basis of tradition. It is a pity that the author does not seem to be familiar with the work on Sanskrit phonetics going on in western countries. The recently published (1953) "Phonetics in Ancient India" by W. S. Allen deals with many matters discussed in this work but with an entirely different approach.

This is only the first part of the work. It is to be hoped that the U. P. Government will enable Pt. Ramajna Pandey to continue the work and finish it.

K. A. Subramania Iyer
*Lucknow University.*

# वक्तव्यम्

प्रायो बहुस्थलावच्छेदेन व्याकरणदर्शनभूमिकेयं मया समवेक्षि ।

यादृशो व्याकरणागमांशोऽनेन ग्रन्थकर्त्राऽप्रतिमप्रतिभाशालिनां पुरस्तादुपस्थाप्यते । स प्राचीनतमोऽपि नव्यभव्यतां न परिजहाति । तदुक्तं हरिणा "यः पतञ्जलिशिष्येभ्यो भ्रष्टो व्याकरणागमः । स एव दाक्षिणात्येषु ग्रन्थमात्रे व्यवस्थितः ॥

पर्वतादागमं लब्ध्वा भाष्यबीजानुसारिभिः ।
स नीतो बहुशाखत्वं चन्द्राचार्य्यादिभिः पुनः ॥" इति ।

अभियाक्यपदीयकाराभिहितिभिर्नितरां निगूढं व्याकरणागमरहस्यं हरेर्वाग्भाविभिर्बुधैर्न यथावत्पाठ्यपाठनपरम्परामानीतमत उच्छिन्नमिव जातम् ।

तत्रभगवता पतञ्जलिनाऽपि "चत्वारि वाक्परिमितानीत्यस्य व्याख्यायाम् चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्चेत्येवं व्याचक्षाणेनागमरहस्यस्य गोपितत्वमेव द्योतितम् ।

"संग्रहे प्राधान्येन प्रदर्शितं नित्यो वा स्यात् कार्य्यो वेति, भाष्येण शब्दप्रकृतिरपभ्रंश इति संग्रहकार इति हेलाराजोक्त्या च तदानीमुपलभ्यमानोपि संग्रहो नैव सुलभप्रचार आसीत् । अल्पविद्यापरिग्रहान् प्रक्रियामात्राध्ययनशीलान् वैयाकरणनवाप्य परिभ्रष्टो व्याकरणागमः ।"

तमेव व्याकरणागममुद्दिधीर्षुरनिर्वचनीयप्रतिभाभास्वरो रामाज्ञापाण्डेयश्चिरात्प्रयतमान आसीत् ।

निगमादपि प्राचीनमागमं सुस्थयन्, आगमे षोडशैव मातृका आसन् तत एव च स्वराणामुद्भवः, अनुनासिकोच्चारणे ऐकारौकारोच्चारणे च त्रुटिं प्रातिशाख्यप्रमाणैर्दृढयन् मुख्यानि चत्वार्य्येव कारकाणि इति च व्यवस्थापयन्, स्वासाधारणगवेषणापद्धत्ये-

तदानाधुनिकानन्वेषकानधरयन् नवनवोन्मेषपथपथिकानाश्चर्य्यं-करान् पदार्थानुद्भावयन्नयं पाण्डेयमहोदयोऽवश्यमेवोत्साहप्रदा-नास्पदतामर्हति ।

जगदीश्वरं प्रार्थये च शतादप्यधिकं स्वस्थोऽचिन्तचित्तो जीवन्नेवमेवानन्यसाधारणं कार्य्यं कुर्वाणः परमरमणीयां कीर्त्ति-कल्पलतिकां लभेतेति ।

सभापतिशर्मोपाध्यायः
एम्. एल्. सी.
प्रिन्सिपल, बि० सं० कालेज, काशी

# प्राक्कथनम्

सम्बन्ध-व्यक्ति-जातित्रयविमलपदश्चारुबाह्यान्तराभ्यां
स्फोटाभ्यां शीर्षकाभ्यां विहितनिजतनुर्दिक्क्रियासाधनाख्यैः ॥
शृङ्गैः कालात्मरूपैः पुरुषगुणगणैर्वृत्तिलिङ्गैः ससंख्यै-
र्द्रव्यैः सोपग्रहैर्यो जयतु निजकरैः सप्तभिः शब्दमूर्त्तिः ॥ १ ॥
परं परां प्रणम्याहं पितरौ मातृका गुरून् ।
भूमिकालेखनात् पूर्वं किञ्चिदत्र निवेदये ॥ २ ॥

भूमिकायां मया संक्षेपेण किञ्चित् प्रकाशयिष्यते । सम्प्रति यत् किञ्चिदहं वच्मि तत्र न मेऽभिमानो मन्तव्यः केवलं स्वान्ते महान्तं क्षोभमनुभवन् सर्वान् आस्तिकान् उद्दिश्य साञ्जलिबन्धं प्रार्थये । भो भोः सज्जनाः ? बहोः कालादधुना भावत्कं भारतं स्वातन्त्र्यं प्राप्य बाल इव यौवनावापनेऽहर्निशं चेष्टते । वयमपि चेतनाश्चैतन्यस्यैव प्राधान्य-माशासु सडिण्डिममुद्घोषयन्तो बहुविधसम्प्रदायनिगडिता अपि रात्रिन्दिवं नूतनातिनूतनसम्प्रदायनिर्माणे बद्धपरिकरा वर्तामहे ।

अपरे च जडवादिनो वैदेशिका नव्यभव्यव्योमयानादिनिर्माणेन जनानुपकुर्वन्तः सततं प्रयतन्ते । दृष्टिं निक्षिपन्तु भवन्तोऽस्माकं पूर्वजानां स्पष्टासु सूक्तिषु यथोक्तं भगवता यास्केन निरुक्ते वाक्यपदीय-टीकायां हेलाराजद्विजन्मना च किं वर्तते तादृशं साहसमाधुनिकेषु विप्रप्रवरेषु अन्येषु वा केषुचिद् विद्वत्सु । ये हि स्वयं गर्ते पततोऽन्यानपि च पातयतो मनुजान् सन्मार्गं प्रदर्श्य समुद्धरेयुः । न दृश्यन्तेऽद्यत्वे भगवता पतञ्जलिना परिभाषिताः शिष्टाः, नापि च तादृशाः शिष्याः किञ्चिदालोचयन्तु भवन्तः । अस्य शिष्यशब्दस्य प्रयोगः कं भावमवल-

स्य अध्याप्येषु जनेषु कुतोऽस्माकं पौर्वकालिकैर्बुधैः । तथाहि शिष्यस्य शासकेन अध्याप्यस्य अध्यापकेन शिक्ष्यस्य शिक्षकेण गुरोस्तु छात्रेण सह संवन्धो जागर्ति ।

तत्र शिष्यशब्दो भाष्ये स्थानिवत्सूत्रे उपाध्यायेन ( महा. अ. १ पा. १ सू. ५६ पृ. ११३ प. २५ ) आकडारसूत्रे ( पा. १।४१ )

आचार्येण छत्रादिभ्यो णः ( ४।४।६२ ) इति सूत्रे गुरुणा मघवा बहुलम् ( ६।४।१२८ ) इति सूत्रे शासनीयेऽर्थे प्रयुक्तोऽस्ति ।

शिक्षणीये पुरुषे शिक्ष्यशब्दप्रयोगमकृत्वा शिष्यशब्दं प्रयुञ्जानस्य जनस्य गूढोऽभिप्रायोऽवगन्तव्यः ।

तथाहि शिक्षकेणाध्याप्यः पुरुषो यदाध्यापितो भवति तदा स शिक्षित इत्युच्यते । परं यदि शिष्यः शिष्यते स्म तदा स शिष्ट इति कथ्यते । एतदर्थम् विद्या ह वै ब्राह्मणमाजगाम, इत्याद्यागमोक्तिं संस्मृत्य तादृशं शासनीयं शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ।

इति गीतोक्तेनुसारम् अर्जुनमिव प्रपन्नं जनं शिष्टं विधातुं शिष्यशब्दः प्रयोगपदवीमानीतोऽभूत् । एवं सति शिल्पिभिः प्रस्तरादि-निर्मितायां प्राणप्रतिष्ठादिसंस्कारैः संस्कृतायां प्रतिमायां भगवत्तादा-त्म्यभावनया भगवदभेदेन सम्यगर्चितायां यद्यैहिकामुष्मिकफलानि लब्धुं शक्यन्ते तर्हि भगवन्निर्मितायां भगवतैव प्राणैर्योजितायां गुरुरूपायां व्यक्तौ शिष्यो यदि भगवद्बुद्ध्याऽभिगमपादोपस्पर्शनादिभिः समर्च-येत् तर्हि अवश्यमेव, ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ।

'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्'

इत्यादि गीतोक्तवाक्यसूचितं भक्तत्वं तस्मिन् प्रकाशेत तत्सम-कालमेव त्वदाश्रितानां जगदुद्भवस्थितिप्रणाशसंसारविमोचनादयः ।

इति स्तोत्ररत्नोक्तपद्यानुसारं भगवता भक्तं भगवत्तादात्म्यापन्ने पुरुषे ब्रह्मविष्णुरुद्रनिभे तादृश्यः शक्तयोऽवश्यमेव दृग्गोचरीभूता

भवेयुरित्यत्र नास्ति किञ्चिच्चित्रम् । स च भक्तः स्वेच्छया ब्रह्माद्यन्यतमभावेन व्यवहरेत् सर्वभावेन वेति स एव निश्चेष्यति । अतः सर्वेऽप्यास्तिकास्तादृशं प्रयत्नं विदधतां येन रूस:मेरिकाप्रभृतिभी राष्ट्रैः संसारमसमये समुच्छेत्तुं प्रयत्नो मा करीति ।

इह प्रकृतविषये किञ्चिदुच्यते:--

अयं हि दर्शनीयो विषयो द्वादशोत्तरैकोनविंशतिशततमात् ख्रीस्ताब्दादनुत्तरणं समालोचनापथं प्रापितो ग्रन्थरूपं लब्धुं व्यग्रोऽभवत् । तदा कीदृशमाकारमस्मै दद्यामिति चिन्तयन् निरचिनवम् । 'अवश्यमेव दर्शनीयः पुरुषः पीठिकायामेव संस्थाप्यः, पीठिका च कांचिद् भूमिकामपेक्षते इति कृत्वैव प्रथमं मया भूमिकेयं विनिर्मिता । तस्यां च स्वनविज्ञानरूपा पीठिका प्रतितिष्ठतु । तस्यां षोडशभिरङ्गै रञ्जितो भूमिका-पीठिका-प्रतिमारूपेण बद्धो दर्शनात्मा पुरुषः सततमनुसन्धेयः । अग्रे प्रकाशं प्रापयिष्यमाणायां पीठिकायां षोडशदलानि एका च कर्णिकेति सप्तदश प्रकरणानि भवेयुः । या च ग्रन्थरूपं प्राप्ता प्रकाशनाथ त्वरते । प्रतिमाऽपि भूमिकायां संक्षेपं रूपमाप्ता विस्तररूपेण समक्षमागन्तुं कथ्यन समयमपेक्षते ।

भो भोः सहृदया दीयतां दयादृष्टिर्मयि भगवतिप्रपत्तुं व्यग्रे मानवे । नाहमितस्ततो विप्रकीर्णान् विषयान् संक्षिप्य प्रतिमायां सन्निवेशयितुं वाञ्छामि । किन्तु काले काले भगवतैव विशुद्धायां मदीयायां बुद्धौ निवेशितान् पदार्थान् संकलय्य शिक्षानिरुक्तप्रातिशाख्येत्यङ्गत्रयविशिष्टं व्याकरणरूपमङ्गिनं परिष्कृत्य निगमागमाद्यर्थानुकूलं सत्यवसरे स्थापयिष्ये । प्रार्थये च भगवन्तं यदयं मम सुहृत् पार्थसारथिगृहश्रमादिमन्त्री शिक्षैकसागरपारदृश्वा योगं युञ्जानः श्रीसम्पूर्णानन्दो नीरोगः सौभाग्यसम्पन्नश्चिरं जीव्यात् । यस्योद्योगेन चिरात् समीहितोऽर्थस्त्वरितं सिद्धिंप्रापितो भविष्यति ।

अहमपि स्वीयेऽस्मिन् जन्मनि बहुभिर्मदीयैर्मित्रैर्बहुविधग्रन्थ-निर्माणार्थमुद्योजितोऽपि पर्याप्तद्रव्यलाभलोभं दर्शितोऽपि नहि तादृशान् ग्रन्थान् निर्मातुं प्रवृत्तोऽभवम्। वर्तते च तादृशासाधारणजनोपकारकग्रन्थनिर्माणेऽभिप्रायः। स चैतद्ग्रन्थनिर्माणानन्तरं सफलो भूयादिति भगवन्तमभ्यर्थये।

एतद् ग्रन्थस्वरूपमाविष्कर्तुं नियोक्तारं स्वर्गगामिणं डाक्टर ए० वेनिस् महोदयम्, तथा डाक्टर टी० के० लद्दूमहाभागं च सततं पूज्य बुद्धया संस्मरामि।

अधुनाऽस्मिन् भारते प्रगाढपाण्डित्यैकाधारं प्राच्यप्रतीच्यदर्शनाचार्यं म० म० प० श्रीगोपीनाथकविराज महाभागम् डी० लिट् इत्यादि-पदवीयोग्यांश्च छात्रान् विदधतम् एतद्ग्रन्थनिर्माणेऽन्तरान्तरा ग्रन्थनीयान् विषयान् निर्दिशन्तं श्रीमन्तं पण्डितराजं विधानपरिषदो मुख्यं सभ्यं गुरुकल्पं श्रीसभापत्युपाध्यायं च स्तुतिकुसुमाञ्जलिभिः समर्चामि।

अभिवादये च स्वर्गगामिणोऽस्माकमाद्यान् गुरून् व्याकरणैकप्राणभूतान् देवनारायणत्रिपाठिनः (तिवारीजीतिनाम्ना प्रसिद्धान्) गोनर्दीयावतारान् वैयाकरणकेसरिणस्तपसाऽर्जितार्षशक्तीन् द्वितीयान् गुरून् म० म० भारद्वाज दामोदरशास्त्रिणः तृतीयान् गुरून् सकलदर्शन पारावारीणान् साहित्यार्णवकर्णधारान् 'सी० आई० ई०' इत्यादिपदवी विभूषितान् मानवल्ली गङ्गाधरशास्त्रिणः।

भारतमार्तण्डान् अत्रैव विद्यारस इत्यादिपदवीविभूषितान् साक्षात् शिवावतारान् गवेषणाशक्तिविशिष्टान् मदीयगवेषणाश्रवणमात्रेण प्रचलत्तुन्दान् आस्तिकनास्तिक सकलदर्शनप्राणभूतान् म० म० शिवकुमारमिश्रांश्चाभिवादये।

येषु येषु ग० सं० कालेजाध्यक्षेषु सत्सु मदीयं गवेषणाकार्यं प्रचलित-

मासीत् तेषु अन्यतमं डा० मङ्गलदेवशास्त्रिणम्, मन्मित्रं म० म० खिरते श्रीनारायणशास्त्रिणम् मदीयव्याकरणदर्शनभूमिकायाः साकल्येन द्रष्टारं को० अ० ऐयर महाभागम् सम्प्रति काशिकराजकीय संस्कृतमहाविद्यालयाध्यक्षं व्याकरणाचार्यम् एम० ए० प० त्रिभुवनोपाध्यायं च धन्यवादशतैरभ्यर्चये ।

का० रा० सं० महाविद्यालयप्रधानाध्यापकं पं० बदरीनाथशुक्लम्, काशिकराजकीय संस्कृतमहाविद्यालये, व्याकरणाध्यापकम्, अध्यापने लब्धयशसं पञ्चोली श्रीबालकृष्णम्, वेदविद्याप्रवीणं पुराणादिशास्त्राध्यापकमनन्तशास्त्रिफडके महोदयम् सरस्वतीसुषमासम्पादकं दर्शनाचार्यं व्रजवल्लभद्विवेदं च धन्यवादशतैर्भूषये एम० ए० कल्पो व्याकरणाचार्योबिरला सं. महाविद्यालयाध्यापक रामावधपाण्डेयो शुभकामनाभिः परिवर्ध्यते । एतैर्महोदयै ग्रन्थेमुद्रणे बहुविधं साहाय्यं दत्तमिति पार्थसारथिः श्रीकृष्ण एतेषां मनोरथं पूर्यादिति प्रार्थये ।

वेदो हि विश्वस्य सनातनं सर्वश्रेष्ठं च साहित्यम्। व्याकरणञ्च तदीयतत्त्वप्रकाशनपटीयान् प्रदीपः। तच्च प्रक्रिया दर्शनं चेति द्विधा विभक्तम्। तत्र प्रक्रियांशो बहुभिर्वैयाकरणैः सविस्तारं सपरिष्कारं निर्वर्णितः। परन्तदीयन्दर्शनं न सम्यक् परिशीलितमभूत्। केवलन्तत्र भवान् भर्तृहरिरेव वाक्यपदीये व्याकरणदर्शनं व्यवेचयत्। अन्यत्र तु तद्दर्शनस्य केचित्केचिदंशा एवेतस्ततः समुपलभ्यन्ते। अतो दर्शनमिद-मद्यावधि रहस्यमयमविस्पष्टप्रायं चातिष्ठत्। यद्यपि भगवतः पतञ्जलेः शिष्यपरम्परायाश्चन्द्राचार्यविष्णुरातादि वैयाकरणानाञ्च प्रयत्नेन व्याकरणदर्शनद्रुमो भृशं पल्लवितः पुष्पितश्चाभवत्परं कालक्रमेण स पुनरपाचीयत। तस्य पुनरुद्धारमावश्यकमाकलय्य बहुवर्षतो व्याकर-णदर्शनानुसन्धानकर्मणि व्यापृतो वैयाकरणप्रवरः पं० श्रीरामाज्ञापा-ण्डेयमहोदयः काशिकराजकीयसंस्कृतमहाविद्यालयस्य गवेषणाविभागे उत्तरप्रदेशीयशासनेन नियोजितः। स च महता परिश्रमेण तत्कार्यं समपादयत्। तस्यैव कार्यस्य कश्चन भागोऽस्मिन् ग्रन्थे प्रकाशितः। परमिदं कार्यमेतावद्विपुलं महत्त्वपूर्णञ्च यन्महान्तं मनोयोगं दीर्घं परिश्रमं द्रढीयसीं चित्तस्वस्थातां चापेक्षतेऽतो यद्युत्तरप्रदेशीयं शासन-मपेक्षितसुविधासम्पादनपूर्वकं श्रीपाण्डेयमहोदयमपरमपि वर्षद्वयमस्मिन् कर्मणि स्थापयेत्तदा व्याकरणदर्शनस्योपक्रान्तं कार्यं पूर्णतामेष्यति संस्कृतविज्ञानां च महान्तमुपकारमाचरिष्यतीति मे दृढो विश्वासः।

**त्रि० प्र० उपाध्यायः**

एम० ए०, आचार्यः।

( काशिक राजकीयसंस्कृतमहाविद्यालयाध्यक्षः )

॥ ओ३म् ॥

# विषयसूची ।


| विषयः | पृष्ठम् |
|---|---|
| मङ्गलश्लोकः | १ |
| व्याकरणदर्शनशब्दार्थः | १-२ |
| व्याकरणदर्शनलेखनेतिहासः | ३ |
| नवीनप्रवृत्तेर्महदन्तरम् | ३ |
| एतस्य दर्शनस्य सामयिकत्वम् | ४ |
| माधवेन सम्यग् नोपन्यस्तम् | ५ |
| लघुमञ्जूषादिना न गतार्थता | ५ |
| व्याकरणस्वरूपम् | ६ |
| आपः पवित्रमित्यस्य नवीनोऽर्थः | ८ |
| प्रकृतिप्रत्यययोर्वास्तवं रूपम् | ९ |
| शब्दपरम्परायामर्थपरम्परानुस्यूता | ११ |
| पराया वाण्या व्यवहारातीतत्वम् | ११ |
| पश्यन्त्यामेव शक्तिशक्तिमतोश्चर्चा | ११ |
| कालाख्या शक्तिस्तत्रैव | ११ |
| तत्समापन्नस्य सृष्ट्यादिकर्तृत्वम् | ११ |
| अत्र वेदः प्रमाणम् | १२ |
| प्रतिभापश्यन्त्योर्विभागैक्ये | १३ |
| प्रणवपदेन पश्यन्ती ग्राह्या | १४ |
| वैयाकरणशिष्टयोरैक्यम् | १५ |
| मन्वादयोऽपि नहि महर्षयः | १५ |
| अपोद्धारपदार्थः | १६ |
| यास्कमतेनसंप्रति ऋषीणामनुत्पत्तिः | १६ |
| व्याकरणस्य मुख्यं प्रयोजनम् साधूनामेव वाचकत्वञ्च | १७ |
| व्याकरणात्पूर्वं शिक्षाध्ययनं युज्यते | १७-१८ |
| अनृतद्वैविध्यम् | १९ |
| अपभ्रंशप्रादुर्भावः | २० |
| शब्दसाधुत्वज्ञानपूर्वकयोगाभ्यासेनाभ्युदयः | २१ |
| पाणिनेः शिष्टत्वविचारः | २१ |
| विशेषसामान्यभेदेन साधुत्वं द्विविधम् | २२ |
| दर्शनान्तरापेक्षयास्य विशेषः | २३ |
| अर्थप्राधान्यमाश्रित्य न्यायवैशेषिकयोः प्रवृत्तिः | २३ |
| ज्ञानप्राधान्येनान्येषां दर्शनानामवतारः | २४ |

| विषयः | पृष्ठम् |
|---|---|
| शब्दप्राधान्येन व्याकरणतन्त्रयोः | २४ |
| व्यवहारपरमार्थदशयोरस्योपयोगः | २४ |
| व्याकरणागमसंप्रदायविच्छेदः | २५ |
| योगमार्गेण षट्चक्रभेदः | २७ |
| तान्त्रिकाणां सिद्धान्ते बिन्द्वादीनि महाबिन्द्वन्तानि, अपराण्यपि दश चक्राणि | २७ |
| वैदिकमार्गे चतुर्णामेव चक्राणां भेदनेन उत्तमस्य ज्योतिष उपलब्धिः | २७ |
| आगममार्गपारङ्गतानां व्यासशुकादीनां चक्रभेदमन्तरापि उत्तमस्य ज्योतिष उपलब्धिः | २८ |
| भूमिकायां पीठिकाप्रतिमयोरर्थः संक्षिप्तः | २९ |
| व्याकरणदर्शनस्य किं मूलभूतं वस्तु | २६ |
| सर्ववेदपारिषदं पाणिनीयं व्याकरणम् | ३०–३१ |
| व्युत्थितावस्थायामेतन्निर्माणम् | ३२ |
| स्फोटस्मर्ता स्फोटायनः | ३३ |
| वृत्तिभेदेन कालभेदः | ३४–३५ |
| अष्टाध्यायीस्वरूपम् | ३५ |

| विषयः | पृष्ठम् |
|---|---|
| द्रव्यशब्दार्थः | ३६–३७ |
| शब्दस्वरूपम् | ३७–३८ |
| ध्वनिर्द्विविधः | ३९ |
| एकस्यैव स्तोत्रस्य पठने कालवैविध्ये कारणम् | ४० |
| इन्द्रियविषययोः संस्कारः | ४१ |
| स्फोटो द्विविधः, आन्तरो बाह्यश्च | ४३–४५ |
| अष्टानां स्फोटानामुपन्यासः | ४६–४७ |
| षोडश स्फोटाः | ४८–५० |
| सृष्टिक्रमः | ५१–५३ |
| भाषाविज्ञानप्राधान्यमत्र सृष्टिक्रमस्तु प्रासङ्गिकः | ५३ |
| अदृष्टोत्पत्त्याभ्युदययोगः | ५४ |
| परा व्यवहारातीता | ५४ |
| ज्ञानस्य शब्दरूपेण परिणामः | ५५ |
| षोडश मातृकाः | ५६ |
| एकविंशतिवर्णा व्यवहारोपयोगिनः | ५६ |
| वर्णोच्चारणप्रक्रिया | ५७ |
| शब्दविषये त्रीणि दर्शनानि | ५९–६१ |
| वर्णविशेषसृष्टिः, स्थानप्रयत्नविवेकश्च | ६२ |

| विषयः | पृष्ठम् |
|---|---|
| तैत्तिरीयप्रातिशाख्यभाष्यमते परिमाणत्वेन वर्णविभागः स्वरवर्णमात्रविषयः | ६३ |
| स्थानैकदेश्यनुप्रदानप्रयुक्तो भेदः | ६३ |
| विवारसंवारयोरेवोपादाने आन्तरतम्यसिद्धौ अन्येषामुपादानस्यावश्यकता | ६४ |
| प्रक्रियायामनुपन्यस्तस्यापि बाह्यप्रयत्नस्य प्रसादे आन्तरतम्यार्थमुपादानम् | ६५ |
| तैत्तिरीयप्रातिशाख्यानुसारं वर्णोत्पत्तिप्रक्रिया | ६७ |
| भट्टनागेशोक्तबाह्यप्रयत्नस्वरूपखण्डनम् | ६७ |
| बाह्यानां न वर्णोत्पत्त्यनन्तरभावित्वम् | ६८ |
| स्थानकरणाभ्यन्तरप्रयत्नानामुपन्यासः | ६६ |
| तत्र स्वराणां स्थानादीनि | ७० |
| तैत्तिरीये संवृतविवृतावेव प्रयत्नौ स्पृष्टप्रयत्नश्च | ७० |
| तैत्तिरीयमते ऋलृवर्णयोरितिवार्त्तिकस्यानुस्थितिः | ७१ |
| उच्चारणशैलीभेदात्स्थानभेदः | ७१ |

| विषयः | पृष्ठम् |
|---|---|
| वर्णानां स्थानकरणयोर्निर्देशः | ७२ |
| व्यञ्जनानां स्थानादीनि | ७३ |
| व्यञ्जनोच्चारणप्रक्रिया | ७३-७६ |
| यमानां स्वरभक्तेश्च विचारः | ७८-८० |
| यजुःप्रतिशाख्यानुसारं वर्णोपन्यासः | ८० |
| ऋक्प्रतिशाख्यानुसारं वर्णसमाम्नायः | ८२-८४ |
| अनुस्वारोच्चारणे विशेषः | ८४-८५ |
| सामप्रातिशाख्यानुसारं वर्णोपन्यासः | ८५-८६ |
| अथर्वप्रातिशाख्यानुसारं वर्णोपन्यासः | ८७-८८ |
| करणैः स्थाने कीदृशः प्रयत्नो विधेयः | ८८-८९ |
| प्रथमाः तृतीयाः द्वितीयाश्चतुर्थाश्च संपद्यन्ते | ८९-९० |
| पाणिनीयशिक्षानुसारं वर्णाः | ९०-९३ |
| पाणिनीयव्याकरणे वर्णानां स्थितिः | ९३-९४ |
| संभाव्यमाना वर्णाः | ९५ |
| सन्धिभेदाश्चत्वारः पञ्चधा च | ९६-९७ |
| वस्तुतस्त्रय एव सन्धयः | ९७-९८ |

| विषयः | पृष्ठम् |
|---|---|
| वैष्णवतन्त्रानुसारं वर्ण-स्वरूपम् | ९८-१०० |
| शैवशाक्तानुसारं वर्णाः | १०० |
| तत्रत्यः सृष्टिक्रमः | १०२ |
| तन्त्रालोकानुसारम् | १०३-१०७ |
| मातृकाचक्रानुसारं वर्णोपन्यासः | १०८-११० |
| सर्वेऽपि विषया आर्षप्रयत्न-प्रभवाः | ११० |
| अथ प्रतिमाविषयसंक्षेपः | ११० |
| आधुनिकदर्शनानां मूलं संग्रह एव | १११ |
| सत्तैव मूलं तत्त्वम् | ११२ |
| तस्या द्विविधः परिणामः | ११३ |
| षण्णां भावविकाराणामु-पन्यासः | ११४ |
| द्विविधो विवर्तः सिद्धविवर्तः साध्यविवर्तश्च | ११७ |
| परिणामवादो वैयाकरणानाम् | ११८ |
| सत्तैव नानाभावं भजते | ११९ |
| शब्दब्रह्मैवोत्तमं ज्योतिः | १२० |
| सत एव सर्वमुत्पद्यते | १२१ |
| बिन्दुबीजनादनिर्देशः | १२३ |
| निरुक्तमूलकशब्दार्थ-सृष्टिक्रमः | १२४ |

| विषयः | पृष्ठम् |
|---|---|
| प्रकाशो बिन्दुः प्रकृतिः तत्र लीनः प्रत्ययः ततो निःसरति | १२४ |
| षोडशमातृकास्वरूपञ्च | १२५-१२६ |
| सृष्टिक्रमे मूलभूतनिरुक्तस्यो-पन्यासः | १२७ |
| तन्मते प्रकृतेः प्रतिमाया उत्पत्तिः | १२८ |
| अस्मिन् विषये विशेषतो दृष्टिरपेक्ष्यते | १३० |
| बुद्धौ ज्ञानस्य प्राधान्यं धृतौ तु क्रियायाः | १३१ |
| सृष्टिविसृष्ट्योः स्वरूपम् | १३२ |
| षोडशमातृकाविषये तान्त्रिकाणां वैयाकरणानां च मतभेदः | १३३ |
| प्रमाणविमर्शः | १३४ |
| मनुष्याणां प्रत्यक्षज्ञानमसम्भवि | १३५ |
| अत्रार्थे भर्तृहरिसम्मतिः | १३५ |
| शब्दस्य मुख्यं प्रामाण्यम् | १३६ |
| शब्दापेक्षयानुमानादि दुर्बलम् | १३७ |
| अत्र भाष्यस्य प्रमाणतया प्रदर्शनम् ( टिप्पणी ) | १३७ |
| उपमानं प्रमाणतया न गण्यते | १३७ |
| ऋषि-मुनि-मनुष्य-पशु-भेदभिन्नाश्च-तुर्विधा मानवाः | १३८ |

| विषयः | पृष्ठम् |
|---|---|
| ऋषिरेव शिष्टः | १३६ |
| व्यवहारार्थमपूर्णमपि प्रत्यक्षं स्वीक्रियते | १४० |
| व्याकरणे मनसो व्यापकत्वम् | १४१ |
| चरके मनसोऽणुत्वं योगे तु व्यापकत्वमेव | १४१ |
| व्याकरणे अनुपलब्धिरपि प्रमाणम् | १४२ |
| प्रत्यक्षं द्विविधम् | १४२ |
| आगमपदेन शब्दः | १४३ |
| प्रत्यक्षेऽपि तारतम्यम् | १४४ |
| ऋषीणामिन्द्रियान्तरेणापीन्द्रियान्तरव्यापारः | १४४ |
| भाष्ये प्रत्यक्षस्यानुमानस्य चोपन्यासः | १४५ |
| स्थानभेदेन प्रत्यक्षादपि अनुमानस्य बलीयस्त्वम् | १४६ |
| मोक्षविमर्शः | १४७ |
| आधुनिकानि दर्शनानि संग्रहमूलकानि | १४८ |
| वैयाकरणानां श्रुतेः प्रामाण्येन मोक्षक्रमः | १४९ |
| ब्रह्मामृतप्राप्तिः केषाम्? | १५०-१५१ |
| बन्धमोक्षस्वरूपम् व्याकरणस्वरूपञ्च | १५२-१५५ |
| मुक्तौ न हि चितौ लयः | १५६ |
| स्फोटायनस्य स्फोटसमर्तृत्वविवरणम् | १५७ |
| नित्यस्य स्फोटस्य स्वरूपम् | १५८ |
| स्फोटतत्त्वं जानतामेव सर्वे सर्वार्थवाचका इति ज्ञानम् | १५९ |
| वीचितरङ्गन्यायकदम्बपुष्पन्यायविमर्शः | १६० |
| वीचितरङ्गन्याय एव युक्तः | १६१ |
| स्फोटस्य विभागः काल्पनिकः | १६२ |
| अष्टानां पदार्थानां स्वरूपम् | १६४-१६७ |
| अपोद्धृतार्थस्वरूपम् | १६८ |
| वाजप्यायनदर्शने जातिः | १६९-१७२ |
| द्रव्यं पदार्थ इति पक्षो व्याडेः | १७३-१७५ |
| उभयोर्मतयोर्न विरोधः | १७६ |
| सम्बन्धविमर्शः वाच्यवाचकभावः कार्यकारणभावश्च | १७७ |
| अध्यासश्च सम्बन्धः, स च तादात्म्यम् | १७८-१७९ |
| अत्र भाष्यसम्मतिः | १८० |

| विषयः | पृष्ठम् |
|---|---|
| तादात्म्यविषये पक्षत्रयम् | १८१ |
| योग्यतैव सम्बन्धः | १८२ |
| असङ्ख्याः सम्बन्धाः | १८३ |
| समवायविमर्शः | १८३–१८४ |
| व्यावहारिकद्रव्यनिरूपणम् | १८५ |
| सर्वद्रव्यसामान्यं लक्षणम् | १८५–१८६ |
| अधिकरणशब्दो द्रव्यवाचकोऽपि | १८६ |
| व्याड्यभिमतं द्रव्यं गृह्यते | १८७ |
| अपरेषां मतेऽधिकरणमेव लौकिकद्रव्यपदेन ग्राह्यम् | १८७–१८८ |
| गुणनिरूपणम् | १८९ |
| गुणलक्षणमरुचिग्रस्तम् | १८९-१९० |
| अपरं गुणलक्षणम् | १९१ |
| वस्तुत उभयमपि गुणलक्षणं युक्तम् | १९२ |
| अन्यद् गुणलक्षणम् | १९३-१९५ |
| नवीनमतस्यैकदेशयुक्तिता | १९६-१९९ |
| तल्लक्षणस्यैकदेशयुक्तित्वाभावसमर्थनम् | २०० |
| अष्टाध्याय्यां दिक्पदप्रयोगः, वर्त्तिके च | २०१<br>२०२ |
| हरिमतेन दिशः स्वरूपम् | २०३ |
| अन्तःक्षेपनीत्या दिक्समर्थनम् | २०४ |
| साधनस्वरूपम् | २०५-२०७ |
| वस्तुतः संप्रदानापादानयोर्नकारकत्वम् | २०८-२०९ |
| अत्र निष्कृष्टार्थः | २१० |
| हेतुसाधनयोर्भेदः | २१४ |
| तादर्थ्येऽपि हेतुहेतुमद्भावः | २१५ |
| साधनविषये मतान्तराणि | २१६ |
| शक्तिः साधनमितिमते तासां भेदः | २१७-२१८ |
| शक्तिः भिन्ना | २१९-२२० |
| क्रियानिरूपणम् | २२१ |
| क्रियाया अनुमानगम्यत्वम् | २२२ |
| द्रव्यस्थले अवयवप्रत्यक्षत्वम् क्रियाया अवयवस्यापि न प्रत्यक्षत्वम् | २२३ |
| अधिश्रयणादिरपि समूहरूप एव | २२३ |
| करणादिव्यापारे एव धातोर्वृत्तिर्न संप्रदानादिव्यापारे | २२४ |
| कर्तृव्यापार एव सर्वत्र धात्वर्थः | २२५ |
| सकलकारकानुयायिक्रिया | २२५ |
| व्यक्तिवादेन क्रियालक्षणेऽपोद्धारपदार्थः | २२५ |
| क्रियासमवेता जातिर्धातुवाच्या | २२६ |

| विषयः | पृष्ठम् |
|---|---|
| द्वयोर्भावविकारयोः षट्सु अन्तर्भावः | २२७-२२८ |
| सत्ताया एव साध्यत्वं साधनत्वं च | २२९-२३२ |
| सूत्रादिषु कालसामान्यविशेषयोरुपन्यासः | २३३-२३६ |
| एकादशधा कालकल्पना | २३७ |
| युक्त्या कालभेदस्वरूपम् टिप्पणी | २३८ |
| स्वातन्त्र्यापरपर्याया कालाख्या शक्तिः | २४०-२४१ |
| चिदात्मनः शक्तिः कालः | २४२ |
| विग्रहवती देवता कालः | २४३ |
| सत्त्वमेव तिरोभूतमसत्त्वम् | २४३ |
| योगिनः प्राणसंचारेण कालं कलयन्ति | २४४ |
| अस्य विस्तरः प्रतिमायाम् | २४५ |
| त्रयाणां पुरुषाणामाविर्भावक्रमः | २४५-२४६ |
| सङ्ख्याविचारः | २४७ |
| द्वित्रादिसङ्ख्याभेदव्यवहारे कारणम् | २४७ |
| आश्रयादव्यतिरिक्ता सङ्ख्या | २४७ |
| द्रव्यसमवेता सङ्ख्याऽऽत्मनोऽपि भेदं साधयति | २४८ |
| वचनविषयको विचारः | २४६ |
| उपग्रहस्वरूपम् | २५० |
| लिङ्गविचारः | २५१ |
| लिङ्गलक्षणम् | २५१ |
| लिङ्गव्याप्तिः | २५२ |
| गुणानामुपचयः पुंस्त्वमपचयः स्त्रीत्वम् | २५३ |
| अवस्थाविशिष्टा गुणा लिङ्गम् | २५४ |
| लिङ्गं शब्दसंस्कारमात्रम् | २५४ |
| सप्त विकल्पाः | २५५ |
| पूर्वोक्तस्य भङ्ग्यन्तरेण समर्थनम् | २५६ |
| लिङ्गं शब्दनिष्ठम् | २५७ |
| अर्थनिष्ठं केवलान्वयि | २५७ |
| तस्य शब्दनिष्ठताखण्डनम् | २५८ |
| भाष्योक्ता लिङ्गस्यार्थनिष्ठता | २५९ |
| अथ वृत्तिविचारः | २५६ |
| चतस्र एव वृत्तयः सिद्धान्तसिद्धाः | २५६ |
| एकशेषं विहाय तिस्र एव | २५९ |
| पदसम्बन्धः | २६० |
| सनः पदविधित्वाभावः | २६१-२६२ |
| तद्धितसमाससनाद्यन्तरूपास्तिस्रो वृत्तयः | २६३ |
| समर्थसूत्रप्रत्याख्यानम् | २६४ |
| एकोपस्थितिजनकतावत्समुदायस्यैव वृत्तित्वम् | २६५ |

| विषयः | पृष्ठम् |
|---|---|
| महाभाष्ये परार्थाभिधानं वृत्तिः | २६५-२६६ |
| भाष्योक्तस्य वृत्तिलक्षणस्यार्थद्वयम् | २६६ |
| अजहत्स्वार्था वृत्तिः, जहत्स्वार्था च | २६७ |
| भाष्ये वृत्तिविषये पक्षत्रयम् | २६७ |
| तत्र प्रथमः पक्षः | २६७ |
| द्वितीयः पक्षः | २६८ |
| तृतीयः पक्षः | २६९ |
| तृतीयपक्षे त्रयः पक्षाः | २७० |
| प्रथमः पक्ष एव युक्तियुक्तः | २७० |
| वृत्तिवर्तनवादिनां मतम् | २७१ |
| परमनवीनानां मते वृत्तिलक्षणम् | २७२ |
| समासवृत्तिविचारः | २७३ |
| अव्ययीभावादिसंज्ञानामन्वर्थतादिविचारः | २७४ |
| तत्राव्ययीभावस्यान्वर्थताविचारः | २७४ |
| तत्पुरुषस्यान्वर्थताविचारः | २७५ |
| कर्मधारयस्य द्विगोश्चान्वर्थताविचारः | २७५ |
| बहुव्रीहिद्वन्द्वयोरन्वर्थताविचारः | २७६ |




कमलसदृशं चित्रमिदम् अत्र परातो द्वे श्रेणी दर्शिते स्तः। एका शब्दपङ्क्तिः अपरा अर्थश्रेणिः। प्रतिभापदार्थो बुद्धेः पूर्वभावी विन्यस्तोऽस्ति। चितः प्रकृतौ संक्रमणे क्रियाप्रधानं वस्तु आविर्भवति। सैव प्रतिमा धृतिर्वा। ज्ञानप्रधाना बुद्धिः, इच्छाप्रधानं मनः।

एतस्य मूलं निरुक्तम् ( १४ शखण्डम् ) कठवल्ली च ( इन्द्रियाणि पराण्याहुः इत्यादिका )

चत्वारि वाक्परिमिता पदानि। इदं विष्णुर्विचक्रमे। चित्रं देवानाम्। या सा मित्रावरुणसदनादुच्चरन्ती त्रिषष्टिं वर्णानन्तःप्रकटकरणैः प्राणसङ्गात् प्रसूते॥ तां पश्यन्तीं प्रथममुदितां मध्यमां बुद्धिसंस्थां वाचं वक्त्रे करणविशादां वैखरीं च प्रपद्ये ( साम्बपञ्चाशिका: )

# अथ व्याकरणदर्शनभूमिका[1]

अस्मद्देशिकमस्मदीयपरमाचार्यानशेषान् गुरून्
श्रीमल्लक्ष्मणयोगिपुङ्गवमहापूर्णौ मुनिं यामुनम् ॥
रामं पद्मविलोचनं मुनिवरं नाथं शठद्वेषिणं
सेनेशं श्रियमिन्दिरासहचरं नारायणं संश्रये ॥१॥

---

१ अत्र हि व्याकरणदर्शनमित्यस्य कोऽर्थः ? एवं प्रश्ने तद्घटकदर्शनशब्दस्यार्थः प्रथमं निर्णीयते। अयं हि दर्शनशब्दो भावसाधनः करणसाधनश्च। तत्र भावसाधनत्वे दृष्टिरित्यर्थस्तस्यावबुध्यते। करणसाधनत्वे तु दृश्यते प्रत्यक्षीक्रियते न तु अनुमीयते नापि शब्दजन्यबोधविषयीक्रियते अनेनेति व्युत्पत्त्या दर्शनसाधनमित्यर्थः। एवं सति यैः यैरुपायैर्दृश्यते ते सर्वेऽपि उपाया दर्शनपदव्यपदिष्टा भवितुमर्हन्ति। भावसाधनत्वे तु-"श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः। मत्वा च सततं ध्येय एते दर्शनहेतवः ॥" (सांख्यप्र०भा०अ.१ सू.१) इत्युक्त्या श्रुतिवाक्यश्रवणमन्तरा यत् किञ्चिद् ग्रथ्यमानं वस्तु दर्शनमेव नहि भवितुमर्हतीति कथंकारं दर्शनपदव्यपदिष्टानां दर्शनपदव्यवहार्यता इति चेदुच्यते। सर्वेषामपि दर्शनानामुद्भावकानां चेतसि सैव भगवती श्रुतिः साक्षात् परम्परया वा स्वकीयं कार्यं विदधती वर्तत एव। तामन्तरा तस्याश्चितः प्रकाशस्य

बुद्धिं योऽष्टगुणां ददाति सदयं भक्ताय सक्तात्मने
तत्प्राप्त्या चिदचिद्विभागमहितं विश्वं समुद्भासते ॥
योऽन्तःस्थो बहिरेत्य योगकलया तत्त्वान्तरङ्गत्रयं
दत्त्वा पूतमनस्कतां वितनुतां नारायणःसोऽचिरात् ॥२॥

चतुर्दशाधिकैकोनविंशतिशततमे ख्रीस्ताब्दे डाक्टरवेनिस-महोदयैः काशिकराजकीयसंस्कृतमहाविद्यालयाध्यक्षैर्व्याकरण-

---

खपुष्पायमाणत्वात् । एवं च दर्शनहेतूनां दर्शकं प्रतिपादकं वा शास्त्रं लक्षणया दर्शनपदभाग् भवेदेव किमुत करणसाधनत्वे । तथा च व्याकरणमेव दर्शनमिति कर्मधारये सर्वं व्याकरणं दर्शनमेव भविष्यति । भावसाधनत्वे षष्ठीसमासे व्याकरणस्य दर्शनमित्यर्थः । तत्रापि व्याकरणपदेन व्याख्या-नोपसंख्यानादिविशिष्टं शास्त्रं व्याकरणपदेन ग्राह्यम् । तस्य दर्शनमित्यत्र कर्तरि षष्ठ्या समासे शास्त्रेण यद् यद् दृश्यते तत् सर्वमपि दर्शनमेव भवेत् । अधिकरणस्य सम्बन्धत्वेन विवक्षया षष्ठ्यन्तेन समासे तु व्याकरणशास्त्रे यत्परात्मनः तत्सम्बन्धिनो वा दर्शनस्य साधकं तदेव दर्शनं स्यात् । एवं सति उक्तासु व्युत्पत्तिषु यः कोऽपि व्याकरणसम्बन्धी विषयः स सर्वोऽपि दर्शनपदव्यपदेश्यः सिध्यति । अस्यां स्थितौ पञ्चानां वृत्तीनामन्येषां वा प्रकृतिप्रत्ययसन्धिसमासकारकादीनां सर्वेषां दर्शनत्वे न काचिद् बाधाऽऽपति-ष्यति । किञ्च येन केनापि वैयाकरणेन दृष्टो व्याकरणे पदार्थो व्याकरण-दर्शनपदव्यपदेश्यो भवेत् । तथा चेदं शास्त्रं व्याकरणदर्शनं कथयितुं शक्यते ।

व्याकरणदर्शन-लेखनेतिहासः

दर्शनगवेषणाय नियुक्तोऽभवम्। तत आरभ्य वर्षचतुष्टयं यावदपेक्षितान् ग्रन्थाँस्तया दृष्ट्या पर्यालोचयम् ।

अष्टादशाधिकैकोनविंशतिशततमे ख्रीस्ताब्देऽत्रत्येनाधिकारिणा 'मया सह व्याकरणदर्शनं ग्रन्थरूपे परिणतं कुरु' इति साग्रहमापृष्टः प्रत्याख्यातवाँस्तदीयां वाञ्छाम् ।

तत आरभ्य वीजरूपेण मदीयायां बुद्धौ पुष्टिमासादयन्नयं विषयः परिपक्वो ग्रन्थरूपं लब्धुं व्यग्रोऽभवत् ।

भगवत्प्रेरणया युक्तप्रान्तीयशिक्षामन्त्रिणः श्रीसम्पूर्णानन्दमहोदयाः सप्तचत्वारिंशदधिकैकोनविंशतिशततमे ख्रीस्ताब्दे विहारसंस्कृतसंजीवनसंस्थाया विशिष्टे वार्षिकोत्सवे सभापतिपदमलंकुर्वाणा मया एतद्विषयस्य संपूर्त्यै साग्रहमनुरुद्धा लक्ष्मणपुरमाहूतवन्तो मां वैशद्येन विषयावबोधार्थम् ।

तस्मिन्नेव वत्सरे अगस्तमासे मया पुनरप्यपेक्षितविषयाणां परिपुष्ट्यै ग्रन्थास्तद्दृष्ट्या द्रष्टुमारब्धाः ।

नवीनप्रवृत्तेः पूर्वं समालोचितविषयादद्याधुनिकस्य महदन्तरम्

पूर्वं ये विषयाः प्रतीकरूपेणासन् गवेषितास्ते तु साम्प्रतं न रोचन्ते मे । द्वयोराकाशपातालयोरिव तारतम्यदर्शनात् ।

इदं च व्याकरणदर्शनं पाणिनिसूत्रं कात्यायनवार्त्तिकं पातञ्जलमहाभाष्यं निरुक्तं प्रातिशाख्यं शिक्षां वाक्यपदीयं लघुमञ्जूषां च प्राधान्येनावलम्ब्य प्रावर्त्तितम् ।

एतस्य दर्शनस्योपक्षेपः सामयिकः

ननु सत्सु परमप्रतिभाप्राचुर्यप्रणीतेषु शाब्दिकनिबन्धेषु चर्वितचर्वणवद् व्यर्थोऽयं नव्यग्रन्थग्रथनप्रयास इति चेन्न, सुकुमारबुद्धीनां परीक्षाग्रन्थमात्राभ्यासशीलानां छात्राणां तादृशनिबन्धाध्यापनमात्रलब्धपाटवानामध्यापकानां चक्षुरुन्मीलनाय अन्यदर्शनचर्चालब्धचातुरीकाणां शास्त्रिप्रवराणामाश्चर्यविस्फारितलोचनावस्थोत्पादकचमत्काराय ग्रामं गच्छँस्तृणं स्पृशतीति न्यायेनेषदवभासितसंशयाक्रान्तव्याकरणागमविषयाणामधिगतसर्वशास्त्रप्रमेयग्रामाणां पण्डितप्रवराणामेतद्विषयावबोधसौकर्याय पाश्चात्त्यविदुषां व्याकरणदर्शनीयविषयज्ञापनेन परमोपकृत्यै केवलं साधुशब्दसिद्धिरेव व्याकरणेनानुशिष्यते न कश्चन दार्शनिकार्थविचारलेशोऽप्यस्तीति भ्रमविजृम्भितानामनल्पानां पण्डितकल्पानामविद्योत्सारणेन दृष्टिप्रदानाय स्वात्मनः सन्तुष्ट्यै गुरुवराणां चरणसरोरुहेषु समर्पणेन भृङ्गायमाणस्यैतस्य दर्शनस्य संपुष्ट्यै च प्रकृतप्रयत्नस्य साफल्यं बोध्यम् ।

अपि च महाभाष्ये विप्रकीर्णस्य मूलरूपेण तैरोहित्यच्छलेन विन्यस्तस्य वाक्यपदीये प्राञ्जलतया समुपपादितस्यापि प्रकृतप्रमेयस्य प्रतीकादिप्रदर्शनपरम्परया बीजव्यञ्जनाय पिण्डीभावेनाभीष्टोपहारीकरणाय चास्योद्योगस्य साफल्यमवधेयम् ।

माधवाचार्येण पाणिनिदर्शनं न सम्यगुपन्यस्तम् ।

यद्यपि च माधवाचार्येण सर्वदर्शनसंग्रहे[1] पाणिनिदर्शनमप्यन्यतमत्वेन न्यबन्धि । तथापि तत्र नैव कोऽप्यर्थो यथावन्निरूपितो येन प्रेक्षावतां जिज्ञासूनां लब्धपरम्परोत्कलिका शाम्येत् ।

लघुमञ्जूषादिना च नास्य गतार्थता

लघुमञ्जूषायां नागेशभट्टोऽपि बहून् विषयानधिकृत्य माधवाचार्यापेक्षयोत्तमां कोटिं नीत्वा तान् व्याख्यत् परं तदपि नैव तादृशं प्रमोदास्पदमारोहति दर्शनान्तरीयसंस्कारेण लब्धसांकर्यतया स्वीयविषयाणां गह्वरान्धकारव्याप्तगुहायामिवोपलब्धेर्दूरापास्तत्वात् ।

---

१ तत्र पाणिनिदर्शने प्रथमं तत्प्रयोजनाद्युपन्यासः, ततः स्फोटस्य साधनम्, ततः सत्तायाः स्वरूपम्, ततो द्रव्यं पदार्थः, ततो जातिः, ततः शब्दानुशासनस्य निःश्रेयससाधनत्वप्रतिपादनम्, एतावदेव पाणिनिदर्शनं माधवाचार्येण निबद्धम् । नहि तावता व्याकरणस्य कोऽप्यंशस्तेनोपस्थितः ।

वाक्यपदीयस्य चातिजटिलतयाऽशुद्धिबाहुल्येन च विषया वबोधनाक्षमत्वान्नैव विशुद्धतया स्वान्तामोदजनकत्वम् ।

ननु किमिदं व्याकरणदर्शनं नाम ? किमस्य स्वरूपम् ? कश्चान्यैर्दर्शनैरस्य सम्बन्धः ? कश्च विषयः ? किं च फलम् ? कश्च सम्बन्धः ? को वाधिकारीति चिन्तायामुच्यते ।

व्याकरण-स्वरूपम्

परापश्यन्तीमध्यमावैखरीतिभेदचतुष्टयेनाक्रान्तस्वरूपाश्चतस्रो वाचः सर्वत्रैव निगमागमादिषु समुपलभ्यन्ते । एतासामेव क्वचिद् व्याकृताव्याकृतेति भेदद्वयेन व्यवहारः । तत्र व्याकृतापदेन पश्यन्त्यादित्रय्याः, अव्याकृताशब्देन च शक्तिशक्तिमदादिभेदशून्यायाः पराया विचारो वेदेषु चर्चितः । तथा चैकैव परा[1] वाणी व्याकृताव्याकृतारूपभेदेन द्वेधा विभज्यते ।

"नामरूपे व्याकरवाणि" ( छा ६।३।२ )
"ते मृत्युमतिवर्तन्ते ये वै वाचमुपासते".

---

१—सूक्ष्मामर्थेनाऽप्रविभक्ततत्त्वामेकां वाचमभिष्यन्दमानाम् ।
उतान्ये विदुरमृतामिव च पूतां नानारूपामात्मनि सन्निविष्टाम् ॥
( वाक्य. का १ पृ० १ श्लोक १ टीका )

"एत इति वै प्रजापतिर्देवानसृजतासृग्रमिति मनुष्यान् दिव इति पितॄँस्तिरः पवित्रमिति ग्रहानशव इति स्तोत्रं विश्वानीति शस्त्रमभिसौभगेत्यन्याः प्रजाः"

( श्रुतिः शा. भा. अ. १ पा. ३ अ. ८ सू. २८ )

"स मनसा वाचं मिथुनं समभवत्" ( बृ० १-२-४ ) "वागेव विश्वा भुवनानि" ( वाक्य. का. १ श्लोक १२१ टीका ) "वाग् वै ब्रह्म" ( बृ० ४-१-२ ) परा-वाचा तथाष्टमे[1] ( हंस २ ) इत्यादिश्रुतिभिः भूरादिमहा-व्याहृत्युच्चारणपूर्वकतत्तत्सृष्टिप्रतिपादनपरैस्तत्रत्यैः कथानकैः,

"अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥"
( भा. शान्ति. पृ. २५३ )

इत्यादिस्मृतिभिश्च वाक्पूर्विकैव सृष्टिरवगम्यते । तत्र वाक्पदेन पश्यन्ती एव ग्राह्या, तस्या एव ओंकारो वेदः शब्द-ब्रह्मेत्यादिनाम्नान्तराणि । तथा चोक्तम्—

---

१ एतत्सर्वमथर्वशीर्षोपनिषदि सम्यक्प्रपञ्चितम् ।

"आपः[1] पवित्रं परमं पृथिव्या अद्भ्यः पवित्रं परमं हि मन्त्राः । तेषां च सामर्ग्यजुषां पवित्रं महर्षयो व्याकरणं निराहुः ॥" ( वाक्य० का. १ श्लोक १४ पृ. ८ टीका ) ।

अत्र जलापेक्षया सामर्ग्यजुर्लक्षणानां मन्त्राणां पावित्र्योक्त्या

---

१ अस्यार्थः—पृथिव्या आपः पवित्रम्, अद्भ्य ऋग्यजुःसामलक्षणा मन्त्राः पवित्रम्, ततोऽप्योंकारापरपर्यायं व्याकरणमिति ।

परन्त्वयमर्थः सम्यक् स्वान्ते नावतरति, पञ्चानां भूतानां मध्ये द्वयोः क्रमेण पावित्र्योक्त्याऽवशिष्टानामपि क्रमोक्तेरत्याज्यत्वादिति—"ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात्" (ऐतरेयब्रा०५–३२), "अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् । दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम् ॥" ( मनु० अ. १ श्लो. २३ ) इत्यादिश्रुतिस्मृतिभिरग्निवायुरविभ्य ऋग्यजुःसामोत्पत्तिश्रवणेन कार्यकारणयोरभेदोपचारेणर्ग्यजुःसामपदेन तत्कारणीभूतं भूतत्रयं गृह्यते । न च रवेरेव सामोत्पत्तिश्रुत्या आद्यभूताकाशस्य कारणत्वाभावादभेदोपचारेण कथं पूर्वसंशयापनोदनमिति वाच्यम्, रविपदेनाकाशस्यापि ग्रहणादत एव रौति शब्दं करोतीति व्युत्पत्त्या शब्दाश्रयत्वमेव तस्य प्रवृत्तिनिमित्तम् । वस्तुतस्तु रव्याकाशप्रकाशसूर्यादित्यादयः शब्दाः पर्याया एवासन् । आकाशते प्रकाशते इति मूलव्युत्पत्त्यनुरोधात् शब्दस्य ज्योतीरूपत्वस्य 'आख्यातोपयोगे' ( पा० सू० १।४।२९ ) । इति सूत्रभाष्यसम्मतत्वेन ज्योतिःशब्दयोरभेदेन तदाश्रयत्वस्याप्यभेदाच्च ।

ततोऽपि पावनत्वम् ओङ्कारस्यैवाङ्गीकर्त्तव्यम्। तथा च स्पष्टमेव व्याकरणोंकारयोः पर्यायता लभ्यते। एतच्च वाक्यपदीये बहुषु स्थलेषु स्पष्टमिति विस्तरभयान्नाधिकमिहोच्यते।

प्रकृतिप्रत्यययोर्वास्तविकं रूपम्

तत्रैतामेव वाचमवधीकृत्य प्रकृतिप्रत्ययादिविभागः[1] प्रारभ्यते। अत्र प्रकृतिपदेन माता, प्रत्ययपदेन च पिता गृह्यते। तथा च वक्ष्यमाणयुक्तिप्रामाण्यात् प्रकृतिप्रत्ययौ शक्तिशक्तिमन्तौ चिज्जडौ वाच्यवाचकौ शब्दार्थौ नामरूपे पश्यन्तीप्रतिभाप्रणवेत्यादयः शब्दा व्याकरणापरपर्याया एव।

---

[1] जनिकर्तुः प्रकृतिः (पा० सू० १-४-३०) इति सूत्रभाष्यादिपर्यालोचनया प्रकृतिपदेनोपादानकारणम् "अभावप्रत्ययालम्बना वृत्तिर्निद्रा" (योग० पा० १ सू० १०) इति योगसूत्रस्थवाचस्पत्येन प्रत्ययपदेन निमित्तकारणं गृह्यते तथा चोक्तम्:

"त्रयी विद्या कामधेनुः सा स्त्री भाषाक्षराऽस्वरा।"

इति प्राधानिकरहस्ये श्लो० २२।

भारतप्रामाण्याच्चास्या गोरूपत्वमुक्तम्-वाक्यपदीयटीकायाम्।

गौरिव प्रचरत्येका रसमुत्तमशालिनी।

दिव्यादिव्येन रूपेण भारती गौः शुचिस्मिता॥ इति

"स्वरूपज्योतिरेवान्तः परा‡ वागनपायिनी।

---

‡ 'सूक्ष्मा' इति च पाठः।

एतच्चान्ते स्फोटविचारे यथावसरं स्फुटीभविष्यदपि संक्षेपेणेह किञ्चिदुच्यते—

तथाहि मातृरूपायां प्रकृतौ पितृस्थानीयस्य प्रत्ययस्य संसर्गमन्तरा अर्थप्रत्यायनसामर्थ्याभावादसाधुत्वाच्च—

"न केवला प्रकृतिः प्रयोक्तव्या न केवलः प्रत्ययः" पा० सू० भा० १-२-६४ पृ. २३४ प. १५ । इति न्यायेन केवलायाः प्रकृतेर्नैव व्यवहारसाधकत्वम् । एतस्य मूलतत्त्वं तु पश्यन्त्यामेवावतिष्ठते । तत्रैव सर्वेषां प्रत्ययानां सर्वासां प्रकृतीनां च सम्भूतिस्थानम् अर्थात् तस्या एव पश्यन्त्या रूपद्वयं चकास्ति व्याकरणागमसंस्कारसंस्कृतचेतसां विदुषाम्, एकं प्रकृतिरूपमुपादानकारणम् अपरं च प्रत्ययरूपं निमित्तकारणम् ।

---

तस्यां दृष्टस्वरूपायामधिकारो निवर्तते ॥" इति । वाक्य० टीका का० १ श्लो० १४३ । स्वोपज्ञटीका ।

अपि च प्रकृतिशब्देन प्रधानं सत्त्वरजस्तमोरूपं प्रत्ययपदेन ज्ञानं पुरुषो वा । अत एव नहि केवला प्रकृतिः प्रयोक्तव्या नापि केवलः प्रत्यय इति प्रवादोऽप्येतन्मूलक एव मन्तव्यः । यावता हि प्रत्ययस्य ज्ञानस्य सान्निध्येन प्रकृतौ कश्चन क्षोभः सञ्जायते अयस्कान्तसन्निहिते लौहे इव, अतो द्वयोः पृथग्भावो न युक्तिसंगतः ।

इदं च परम्पराद्वयं पश्यन्तीमेव कामधेनुमाश्रित्य प्रवर्तते । तत्रैका प्रकृतिपरम्परा अपरा च प्रत्ययपरम्परा ।

अर्थपरम्परापि तत्रानुस्यूता

एतयोश्च परम्परयोरर्थपरम्पराप्यनुस्यूतैव व्यवतिष्ठते शब्दार्थसम्बन्धस्य नित्यत्वात् ।

तथा चान्यतरस्य कारणस्याभावे नैव बीजरूपेण स्थितस्याप्यर्थस्याभिव्यङ्ग्यत्वं सम्भवति ।

पराया व्यवहारातीतत्वम्

परायां वाचि तु नैव कश्चन विचारलेशोऽपि सम्भावनास्पदमारोहति दृष्टस्वरूपायां तस्यामधिकारनिवृत्तेरुपदेशात् । तस्याश्च द्वैतत्वे तद्द्वयथ्यापत्तेरद्वैतज्ञानेनैवाविद्यानिवृत्तेर्निर्णीतत्वात् ।

पश्यन्त्यामेव शक्तिशक्तिमतोश्चर्चा

कालाख्या स्वातन्त्र्यशक्तिस्तत्रैव ।

एवं च पश्यन्त्यामेव शक्तिशक्तिमतोश्चर्चा । तस्या एव कालाख्या स्वातन्त्र्यशक्तिः, या ह्यन्यासां शक्तीनां स्फोरणे प्रभवति; अविद्यादयः शक्तयोऽपि तद्विजृम्भितमित्युपरिष्टात् प्रकटीभविष्यति । वाच्यवाचकविभागोऽपि

तत्र समापन्नस्य सृष्टिकरणसामर्थ्यम्

तस्यामेव व्यवह्रियते, तत्रैव समापन्नस्य योगिनः सर्वे सर्वार्थवाचका इति ज्ञानमुत्पद्यते, तस्या एव पश्यन्तीरूपेण सर्वशब्दबीजत्वात् प्रतिभारूपेण च सकलार्थप्रसवत्वात् । तदवस्थायां नैया-

करणानां[1] निखिलार्थसमुत्पादनसामर्थ्यमभिव्यज्यते । एत-त्प्रकाशेनैवान्ये प्रकाशाः प्रकाशन्ते तयोर्द्वयोरग्निसूर्ययोः स्वप्रकाशने सामर्थ्याभावात् । तथा चास्माकं मते जातवेद-सोऽपि न स्वतः प्रकाशकत्वं किन्तु एतत्पारतन्त्र्येणेति स्वप्र-काश्यत्वे तेजोदृष्टान्तस्य गतिर्व्यावहारिकदृष्ट्यैव समर्थनीया । वस्तुतस्तु जातं वेदो ज्ञानं यस्मादसौ जातवेदा इति व्युत्पत्त्या जात-वेदःशब्दोऽपि मुख्यया वृत्त्या ज्ञानमूलागारे परमात्मन्येव वर्तते । अग्नौ तत्प्रयोगस्तु—

---

१—अत एव "त्वदाश्रितानां जगदुद्भवस्थितिप्रणाशसंसारविमोचनादयः । भवन्ति लीलाविधयश्च वैदिकास्त्वदीयगम्भीरमनोऽनुसारिणः ।"

—( स्तोत्ररत्नम् यतिवरश्रीयामुनाचार्यप्रणीतम् श्लो० २० ) इत्यत्रापि यति-वरैर्भक्तानां सृष्ट्यादिकरणसामर्थ्यं समुज्जृम्भते इत्युक्तम्; अत्रायं निष्कर्षः—गुरू-पदेशपद्धत्या समाहितमनसा स्थितं योगिनं "यमेवैष वृणुते" [यजु. ४०।४] इति रीत्या ज्ञानागारात्परमात्मन आयान्तो ज्ञानरश्मयः "ज्योतिर्विज्ज्ञानानि भवन्ति" [ भाष्यम्. १।४।२४ ] इतिपतञ्जलिप्रोक्तसिद्धान्तानुसारं ज्योतिःस्वरूपास्ते पर-मात्मानं नयन्ति । तत्र स्थितश्च योगी विश्वदर्शनसामर्थ्यसम्पन्नः संजायते ।

इममर्थम् "उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम्" [यजु. ७।४१ ] इति श्रुतिः परिपुष्णाति । उद्वहन्ति–समाधापयन्ति । वस्तुतस्तु कृतोद्वाह-मुमापतिम् ( वा. रा. का. १स.२३श्लो. ११) इति पाठे उद्वाहशब्दो विवाहार्थक एव मन्तव्यः । परन्तु अन्यत्र उद्वाहशब्दस्य समाध्यर्थकत्वेन न काचिदापत्तिः ।

इन्द्रं मित्रं वरुणमग्निमाहुरथो
दिव्यः स सुपर्णो गरुत्मान्।
एकं सद्विप्रा बहुधा वदन्त्यग्निं
मित्रं मातरिश्वानमाहुः ॥
[ ऋ. १।१६४।४६ ]

इति मन्त्रे अग्न्यादिशब्दानां परमात्मपरकत्वस्य व्यवस्थापितत्वात् समर्थनीयः।

प्रतिभापश्यन्त्योर्विभाग ऐक्यं च

यद्यप्यर्थदृष्ट्या प्रतिभायाः शब्ददृष्ट्या पश्यन्त्या उपयोगेन तयोर्भेदः प्रतीयते। तथापि शब्दार्थयोस्तादात्म्यस्वीकारान्नैव कश्चन[1] प्रतिभापश्यन्त्योर्भेदोऽङ्गीकार्यः। अत एव व्यवहारेऽर्थकोटौ प्रतिभापदेन पश्यन्त्या अपि बोधो निर्बाध एव। नामरूपे व्याकरवाणीति श्रुत्या नामरूपयोर्व्याकृत्यवस्थायामेव विभागो न तु ततः प्राक् तयोः कश्चन भेदः समवगम्यते। तत्र च नामपदेन शब्दो रूपपदेन च जातिलक्षणो द्रव्यलक्षणो वाऽर्थो बोद्धव्यः। स च वस्तुतो बौद्धः, बाह्यस्य तस्य

अर्थो वस्तुतो बौद्धः

स्वीकारे तन्नाशदशायां द्वयोः सम्बन्धस्यानि-

---

१ इयं प्रतिभा परायाः प्रकृतेरुत्पद्यते महत्तत्वतः पूर्वम्।

त्यत्वप्रसङ्गात् तेषां च नित्यत्वस्य "सिद्धे शब्दार्थसम्बन्धे" ।

[ भा. पस्प. पृ. ६. ]

इत्यनेन कात्यायनेनैव निर्धारितत्वात् । तयोश्च न कोऽपि भेद इत्युपरिष्टात् टिप्पण्यां द्रष्टव्यम् ।

प्रणवपदेनापि सैव ग्राह्या तस्या एव शब्दोऽर्थः सम्बन्ध इति रूपत्रयेण भानम् । तथा चोक्तम्—

प्रणवपदेनापि पश्यन्ती ग्राह्या

"एकमेवाद्वितीयम्" छा. ६।२।१ "प्रणव एवैकस्त्रिधाऽभिव्यज्यते" इति "एकमेव-यदाम्नातं भिन्नं शक्तिव्यपाश्रयात्" [वाक्य० १।२] । इति श्लोकटीकायां हरिणा । एवं च पश्यन्तीरूपव्याकरणज्ञानमन्तरा पराख्यब्रह्माधिगतिः कल्पकोटिशतैरप्यन्यैरुपायैर्दुर्लभैवेति सुगमोऽयं पन्थाः समवलम्ब्यतां वास्तविकीं मुक्तिमभीप्सुभिस्तत्त्वज्ञानकुशलैर्विद्वत्प्रवरैः ।

अस्य च प्रणववादस्य सर्ववेदपारिषदत्वमत एव सर्ववादाविरोधित्वं च स्पष्टमेव वाक्यपदीये"सत्या विशुद्धिः" [वाक्य१। ६ ] इत्यादिना व्यवस्थापितम् । एतस्मादेव प्रणवापरपर्यायाद् व्याकरणाद् भूतभाव्यन्ताः साङ्गोपाङ्गस्मृतिश्रुत्यन्ता विद्याविभागाः प्रभवन्ति, सर्वं च स्थूलं सूक्ष्मं जगत्तस्यैव विवर्तः

परिणामो वा। अत एव—"न हि सर्वशब्दार्थप्रकृतिः" [वाक्य १।१० ] इत्यादिना विश्वानुगित्यादिश्लोकव्याख्यायां हरिणा तस्य सर्वमूलत्वं सम्यङ् निर्णीतमिति विशेषजिज्ञासुभिस्तत एवावधार्यम्।

वैयाकरणशिष्टयोरैक्यम्

तथा वेदमेव मुख्यं व्याकरणशब्दवाच्यम्। तज्ज्ञानेनैव सर्वेषां साधुशब्दानां ज्ञानं निष्पद्यते इति—"पृषोदरादीनि यथोपदिष्टम्" [ पा. सू. ६।३।१०९ ] इति सूत्रे भगवता पतञ्जलिना ध्वनितम्। शिष्टवैयाकरणयोः पर्यायत्वं च स्पष्टीकृतम्। एषामेव शिष्टानां वचांसि प्रत्यक्षमपि प्रमाणमतिशेरते वेदवत् प्रामाण्यं चावहन्ति। एत एव शिष्टा मन्वाद्यपेक्षयापि प्रामाणिकत्वमारोहन्ति।

एतच्च "न हि मन्वादयो महर्षयो न हि सर्वज्ञा वीतरागा वा" इत्यादिना 'ज्ञानमस्मद्विशिष्टानाम्'

[ वाक्य० जाति० ३।४६ ]

वाक्यपदीयकारिकाव्याख्यायां हेलाराजेन सिद्धान्तितम्। अयं चैकज्ञानेन सर्वज्ञानपक्ष आङ्ग्लभाषायां 'डिडक्टिव्' पदेन व्यवह्रियते।

परमेतादृशपुरुषधौरेयस्य कल्पपादपसमत्वादाधुनिकसमये दुर्लभत्वेन लोकम्पृणत्वासम्भवं समालोच्य परमकारुणिकेन

भगवता दाक्षीपुत्रेणाष्टाध्यायीलक्षणं व्याकरणशास्त्रं सर्ववेद-पारिषदं निरमायि। प्रातिशाख्यं तु तत्तच्छाखीयानां कृते तत्तन्महर्षिभिः प्रणीतम् ।

तच्च लोकप्रसिद्धपदार्थस्वरूपानुकूल्येन लौकिकानां वैदि-
अपोद्धार कानां च शब्दानां साधुत्वासाधुत्वे प्रतिपादयतीत्यखण्डाद्
पदार्थः वाक्यार्थादपोद्धारपदार्थःप्रविभज्य व्याख्यातः[1]।

---

१ "अथ वर्णसमाम्नायः" इति सूत्रभाष्ये वैदिकाभरणे प्रातिशाख्यविषये यदुक्तं तत्रत्योऽयं सारोऽर्थः। तत्र हि शिक्षाव्याकरणेषु तु सर्वमुक्तमेवेति व्यर्थोऽयं प्रातिशाख्यप्रणयनप्रयास इति शङ्कायां सर्ववेदसाधारणानि लोकवेदसाधारणानि च कार्याणि तत्रोपन्यस्तानि सन्ति । यथा शिक्षायाम्–

"अष्टषष्टिं वदन्त्येके चतुःषष्टिमथापरे" इति ।

भा० पृ० ५५ प० ३ पा० सू० १-१-५

"बहुलं छन्दसि" [ सू० २।४।३६] "व्यत्ययो बहुलम्" [सू० ३।१।८५] दृष्टानुविधिश्छन्दसि [१।१।५] इत्यादौ कार्यस्वरूपमपि दुर्ग्रहं किमुत विषयविभागः। यद्यप्यविगीतशिक्षानुसारेण केषाञ्चिद् विधीनां शक्यो विषयविभागः प्रतिभाति तथाप्यसौ न सर्वेषां शक्यः ।

अपि च अशक्त्वे नियमातिक्रमाद् ऋषयो न जायन्ते। इत्यनृषीणां कृतेऽवश्यं किञ्चिद् व्यवस्थापनीयम् , इत्यालोच्य परमकारुणिका महर्षयः प्रातिशाख्यं व्यवस्थितानां शिक्षाव्याकरणोपदिष्टकार्याणां विस्पष्टोपदेशानि लक्षणानि प्रणयन्ति स्म

एतेषां च शब्दानां यथावज्ज्ञानपूर्वके प्रयोगे "एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः सुष्ठु प्रयुक्तः स्वर्गे लोके

मुख्यं प्रयोजनम् साधूनामेव वाचकत्वं च

कामधुग् भवति" ( भाष्यम् ६।१।८४ ) इति श्रुत्या कामप्रपूर्त्तिरवगम्यते। तथा चैकस्यापि शब्दस्य सम्यग् ज्ञानपूर्वकमर्थेन सह सम्बन्धस्य साक्षात्कारे तदर्थोत्पादनसामर्थ्यमाविर्भवति शुद्धान्तःकरणानां महात्मनाम्।

---

तन्नान्तरीयकतया तु तत्र तत्र स्पष्टोपदिष्टान्यपि कार्याण्यनुवर्ण्यन्ते। तानि प्रातिशाख्यानीत्याख्यायन्ते।

इदमत्रावधेयम्। शिक्षा नाम षडङ्गयेकाङ्गीभूता। तथा च साधुत्वान्वाख्यायके व्याकरणे किं प्रयोजनम्, कथं वा सा व्याकरणाङ्गभूतेति प्रश्न उदेति। किंच भगवतः पतञ्जलेः—"ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेय इति, प्रधानं च षट्स्वङ्गेषु व्याकरणम्, प्रधाने च कृतो यत्नः फलवान् भवति, पुराकाले एतदासीत् संस्कारोत्तरकालं ब्राह्मणा व्याकरणं स्माधीयते"।

[ महाभाष्य पस्प० पृ० १ प० १९ ]।

इत्याद्युक्तया व्याकरणस्यैव सर्वतः प्रथममध्ययनं सिध्यति न तु शिक्षाया इति चेदुच्यते;—यद्यपि कण्ठरवेण भगवता पतञ्जलिना शिक्षायाः सर्वतः प्रथममध्ययनं नोदाहारि तथापि साधुत्वान्वाख्यानं शिक्षाज्ञानमन्तरसर्वथाऽसम्भवि।

यथास्थानप्रयत्नोच्चारितशब्दघटितवाक्यानामेव प्रयोगस्य पुण्यजनकत्वात् शिक्षायामेव यथावत् स्थानप्रयत्नादीनां स्वरूपप्रदर्शनात्। संस्कारोत्तरकालं ब्राह्मणा

एवमेव सर्वेषामर्थानां सम्यक् सम्बन्धज्ञाने सर्वार्थवाचकत्वं योगिदृष्ट्याऽव्याहतमिति विशेषतो वाक्यपदीये द्रष्टव्यम् । तच्च सर्वार्थवाचकत्वं साधुशब्दानामेवेत्यर्थेन तादात्म्यमपि तेषामेवाङ्गीकर्त्तव्यम् । यद्यपि च व्यवहारेऽर्थवाचकत्वमपभ्रंशानामपि दृश्यते, तथापि भ्रान्तिमूलकत्वेन तस्यावास्तवत्वमेवाङ्गीकर्तव्यम् एतदेव मनसि निधाय पदमञ्जर्या[१]

---

व्याकरणं स्माधीयते' इत्यस्य नेदं तात्पर्यं, यत्ते शिक्षामनधीत्यैव व्याकरणमध्यैषत किन्तु "वेदमधीत्य त्वरिता वक्तारो भवन्ति" [भा०पस्प० पृ. ५ प. ६] इत्युक्त्या वेदाध्ययननान्तरीयकत्वमेव तस्या अनुमीयते वेदाध्ययनार्थं यथास्थानप्रयत्नं वर्णोच्चारणशैलीशिक्षणस्यागतिकगतित्वात् ।

अपि च "पदलक्षणाया वाचोऽन्वाख्यानं व्याकरणं वाक्यलक्षणाया वाचोऽर्थलक्षणम्" ( न्यायभाष्य १।१।५५ ) इत्यभियुक्तोक्त्या द्वयोरन्वाख्यायकयोर्मूलभूतवर्णान्वाख्यानं प्राथमिकमेव मन्तव्यम् । अतः शिक्षाज्ञानं सर्वेषां कृतेऽत्यन्तावश्यकमिति सर्वतः प्रथमं शिक्षाज्ञानमपेक्ष्यत इति सुधीभिर्विचार्यम् ।

१—अनिर्दंप्रथमाः शब्दाः साधवः परिकीर्त्तिताः ।
त एव शक्तिवैकल्यप्रमादालसतादिभिः ॥
अन्यथोच्चारिताः पुंभिरपशब्दा इतीरिताः ।
स्मारयन्तश्च ते साधूनर्थधीहेतवः स्मृताः ॥

यद्यपि लोके गवादयो गाव्यादयश्च सममेव प्रयुज्यन्ते वाचकत्वाभिमानोऽपि सम एव तेषु लौकिकानां साधीयान् इत्यादिषु, तथापि गवादयोऽनादयः साधवस्त एव साक्षाद् वाचकाः । (पदमञ्जरी १।१।७)

हरदत्तमिश्रेणापि साधूनामेव वाचकत्वं व्यवस्थापितम् । न ह्यपभ्रंशैरर्थस्य तादात्म्यं येन तज्ज्ञानं साधु निष्पद्येत । पुराकल्पे त्वपभ्रंशैरसंकीर्णा वागासीदिति न तदानीमेतादृशव्याकरणनिर्माणमावश्यकमभूत् ।

एतेन पूर्वे व्यवहर्तारोऽन्यार्थबोधनेच्छया लोकान् वञ्चयितुमन्यं तदर्थासम्बद्धं शब्दं प्रायुञ्जत । तेन च शब्दार्थसंबन्धत्यागात्तदर्थबोधनात्तमत्काद्वाचामनृतविप्रलम्भादिदोपसंकीर्णत्वमित्यनृतापभ्रंशयोरेकयोगक्षेमत्वादधुनाप्यर्थबोधनेच्छयाऽपभ्रंशशब्दप्रयोगे तत्प्रयोक्तृणामनृतवादित्वं सुस्पष्टमेव प्रतीयते इति ।

अनृतद्वैविध्यम्

"नानृतं वदेत्" ( शतपथ. २-२-२-२० )
इति निषेधोल्लङ्घनप्रयुक्तं प्रायश्चित्तं तेषां सिध्यत्येव ।

**"यथार्थे वाङ्मनसे यथादृष्टं यथानुमितं यथाश्रुतं तथा वाङ् मनश्चेति परत्र स्वबोधसंक्रान्तये वागुक्ता सा यदि न वञ्चिता भ्रान्ता प्रतिपत्तिबन्ध्या वा भवेत्।"**

( योगभा० २।३० )

इति योगभाष्येणापि अपभ्रंशस्याप्यनृतत्वमेव निश्चीयते ।

एवमेव वक्तृवैगुण्यप्रयुक्तमप्यपभ्रंशत्वं कियतां शब्दानां

अपभ्रंश-प्रादुर्भावः

वाक्यपदीये निर्णीतम् । तच्च दैव्या वाचः संकीर्णत्वमशक्ताभिधातृदोषप्रयुक्तमेव । सा चाशक्तिर्द्विविधा—अज्ञानाद् विप्रलम्भादिदोषाद्वाऽन्यार्थेऽन्यशब्दप्रयोगरूपा एका, अभिमतवायुसंयोगोत्पादनासामर्थ्यरूपा च द्वितीया । एतेनापभ्रंशद्वैविध्यमपि व्याख्यातम् । तथा चासाध्वपभ्रंशशब्दयोः पर्यायतैवेति सर्वं सुस्थम् ।

शब्दसाधुत्वज्ञानपूर्वकयोगाभ्यासेनाभ्युदयः

एतादृशसाधुत्वप्रतिपादनपरेऽस्मिन् शब्दानुशासने प्राप्तपाटवा महात्मानोऽपभ्रंशासंकीर्णशब्दतत्त्वाभ्यासात् शब्दपूर्वकं योगमधिगम्य अर्थप्रणाल्या प्रतिभां शब्दप्रणाल्या पश्यन्त्यपराभिधां शक्तिं ( सत्ताम् ) सम्यगवबुध्याभ्युदयेन युज्यन्ते ।

यद्यपि च भगवतः पाणिनेस्तादृशशिष्टमध्ये[1] गणनाऽस्ति

---

१–'अदूरभवश्च' (४–२–७०) इति सूत्रे भाष्ये एकस्मिन् योगे ऽनुवृत्तिर्भवति न वेति विचारणायाम्, एकयोगेप्यनुवृत्तिर्भवतीति प्रतिज्ञाय 'तदस्यास्त्यस्मिन्निति मतुप्' ( ५–२–९४ ) इति सूत्रे द्विस्तच्छब्दग्रहणाभावेन प्रतिज्ञातमर्थमसाधयद् भगवान् पतञ्जलिः । तथा सति कथं 'तदधीते तद्वेद' ( ४–५–५६ ) इत्यत्र द्विस्तच्छब्दग्रहणमितिशङ्किते ।'

"प्रमादकृतमाचार्यस्य शक्यमकर्तुम्" इत्युक्त्या न हि प्रमादराहित्यं भगवतः पाणिनेरायाति ।

पाणिनेः शिष्टत्वविचारः

न वेति निश्चेतुं न पार्यते तथापि स पूर्वाचार्यैः स्वयं च दृष्टान् साधून् शब्दानभिलक्ष्याष्टाध्याय्यां सूत्रद्वाराऽन्वशिषत् । तदनुयायिनश्चापरे कात्यायनप्रभृतयस्तेषां ज्ञानपूर्वके प्रयोगे धर्ममुपदिदिशुः । परन्तु—

**"प्रत्यक्षमनुमानं च व्यतिक्रम्य व्यवस्थिताः"**

**( वाक्य. का. १ श्लो. ३६ )**

इत्यारभ्य

**"तस्मादकृतकं शास्त्रं स्मृतिं वा ःसनिबन्धनाम् ।**
**आश्रित्यारभ्यते शिष्टैः शब्दानामनुशासनम् ।"**

**( वाक्य. का. १ श्लो. ४३ )**

इत्यन्तस्य वाक्यपदीयग्रन्थस्य समालोचनया पाणिनेरभ्रान्तत्वं[१] संप्रदायपारम्पर्येण अपभ्रंशानाक्रान्तसाधुशब्दानुशासकत्वं चावगम्यते । अत्रत्यं तत्त्वं विचारयन्तु गवेषकप्रवरा विद्वांसः ।

---

१ एतेन शिष्टमध्ये पाणिनेर्गणनेत्यायाति । परन्तु टिप्पण्यां प्रदर्शितेन भाष्यसन्दर्भेण तु न तथेति चेन्न, शब्दानां साधुत्वप्रतिपादनविषय एव शिष्टत्वस्याभ्युपगमात् । सूत्रप्रणयनविषये लाघवगौरवचर्चाप्रयुक्तप्रमादस्याकिञ्चित्करत्वात् ।

